ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यम्
भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ ॥

ओङ्कारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः ।
कामदं मोक्षदं चैव ओङ्काराय नमो नमः ॥ ॥

गजाननं भूतगणादिसेवितं
कपित्थजंबूफलसारभक्षितम् ।
उमासुतं शोकविनाशकारणं
नमामि विघ्नेश्वरपादपङ्कजम् ॥ ॥

सुमुखश्चैकदंतश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ।
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ।
विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ।
सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ ॥

शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ ॥

अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ ॥

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् ।
भक्तावासं स्मरेन्नित्यं आयुःकामार्थसिद्धये ॥ ॥

अगजाननपद्मार्कं गजाननमहर्निशम् ।
अनेकदन्तं भक्तानां एकदन्तमुपास्महे ॥ ॥

गजवक्त्रं सुरश्रेष्ठं कर्णचामरभूषितम् ।
पाशाङ्कुशधरं देवं वन्देऽहं गणनायकम् ॥ ॥

एकदंतं महाकायं तप्तकाञ्चनसन्निभम् ।
लंबोदरं विशालाक्षं वन्देऽहं गणनायकम् ॥ ॥

गजवदनमचिन्त्यं तीक्ष्णदंष्ट्रं त्रिनेत्रं
बृहदुदरमशेषं भूतिराजं पुराणम् ।
अमरवर-सुपूज्यं रक्तवर्णं सुरेशं
पशुपतिसुतमीशं विघ्नराजं नमामि ॥

कार्यं मे सिद्धिमायातु प्रसन्ने त्वयि धातरि ।
विघ्नानि नाशमायान्तु सर्वाणि सुरनायक ॥ ॥

मूषिकवाहन् मोदकहस्त चामरकर्ण विलम्बित सूत्र ।
वामनरूप महेश्वरपुत्र विघ्नविनायक पाद नमस्ते ॥ ॥

ब्रह्मानंदं परमसुखदं केवलं ज्ञानमूर्तिं
द्वंद्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ।

अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ॥

अज्ञानतिमिरान्धस्य ज्ञानांजनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ॥

ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम् ।
मन्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ॥ ॥

सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥ ॥

हरिर्दाता हरिर्भोक्ता हरिरन्नं प्रजापतिः ।
हरिः सर्वशरीरस्थो भुङ्क्ते भोजयते हरिः ॥ ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ ॥

मङ्गलं भगवान्विष्णुर्मङ्गलं गरुडध्वजः ।
मङ्गलं पुण्डरीकाक्षो मङ्गलायतनं हरिः ॥ ॥

हरेर्नामैव नामैव नामैव मम जीवनम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ ॥

नमः समस्तभूतानामादिभूताय भूभृते ।
अनेकरूपरूपाय विष्णवे प्रभविष्णवे ॥ ॥

नाहं वसामि वैकुण्ठे योगिनां हृदये न च ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥ ॥

आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः ।
इदमेकं सुनिष्पन्नं वैद्यो नारायणो हरिः ॥ ॥

नमः कमलनाभाय नमस्ते जलशायिने ।
नमस्ते केशवानन्त वासुदेव नमोऽस्तुते ॥ ॥

एष निष्कंटकः पन्था यत्र सम्पूज्यते हरिः ।
कुपथं तं विजानीयाद् गोविन्दरहितागमम् ॥ ॥

शनैर्दहन्ति पापानि कल्पकोटिशतानि च ।
अश्वत्थसन्निधौ पार्थ ध्यात्वा मनसि केशवम् ॥ ॥

यस्याभवद्भक्तजनार्दिहन्तुः
पितृत्वमन्येष्वविचार्य तूर्णम् ।
स्तम्भेऽवतारस्तमनन्यलभ्यम्
लक्ष्मीनृसिंहं शरणम् प्रपद्ये ॥ ॥

श्रीमान् वेङ्कट नाधार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्ताम् सदाहृदि ॥ ॥

विसर्ग बिन्दु मात्राणि पद पादाक्षराणि च ।
न्यूनानिचातिरिक्तानि क्षमस्व पुरुषोत्तम ॥ ॥

श्रियः कान्ताय कल्याण निधये निधयेर्थिनाम् ।
श्री वेङ्कट निवासाय श्रीनिवासाय मङ्गळम् ॥ ॥

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ॥

कृष्णाय वासुदेवाय देवकी नंदनाय च ।
नंदगोपकुमाराय गोविंदाय नमो नमः ॥ ॥

करारविन्देन पादारविन्दं मुखारविन्दे विनिवेशयन्तं ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥ ॥

कस्तूरीतिलकं ललाटफलके वक्षस्थले कौस्तुभं
नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम् ।
सर्वाङ्गे हरिचंदनं च कल्याण कण्ठेच मुक्तावलिन्
गोपस्त्री परिवेष्टितो विजयते गोपाल चूडामणि ॥ ॥

कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणत क्लेश नाशाय गोविन्दाय नमो नमः ॥ ॥

ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थम् ।
पीतं वासो वसानं नवकमलदलस्पर्धिनेत्रं प्रसन्नम् ।
वामाङ्कारूढ सीतामुखकमलमिलल्लोचनं नीरदाभम् ।
नानालङ्कारदीप्तं दधतमुरुजटामंडनं रामचंद्रम् ॥ ॥

रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुंदरम् ।
काकुत्स्थं करुणार्णवं गुणनिधिं विप्रप्रियं धार्मिकम् ।
राजेंद्रं सत्यसंधं दशरथतनयं श्यामलं शांतमूर्तिम् ।
वंदे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥ ॥

रामाय रामभद्राय रामचंद्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ॥

दक्षिणे लक्ष्मणो यस्य वामे तु जनकात्मजा ।
पुरतो मारुतिर्यस्य तं वंदे रघुनंदनम् ॥ ॥

लोकाभिरामं रणरङ्गधीरम् ।
राजीवनेत्रं रघुवंशनाथम् ।
कारुण्यरूपं करुणाकरं तम् ।
श्रीरामचंद्रम् शरणं प्रपद्ये ॥ ॥

रामो राजमणिः सदा विजयते रामं रमेशं भजे ।
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः ।
रामान्नास्ति परायणं परतरं रामस्य दासोस्म्यहम् ।
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥ ॥

नीलांबुजश्यामलकोमलाङ्गं
सीतासमारोपितवामभागम् ।
पाणौ महासायकचारुचापं
नमामि रामं रघुवंशनाथम् ॥ ॥

शांतं शाश्वतमप्रमेयमनवं निर्वाणशान्तिप्रदं
ब्रह्माशम्भुफणीन्द्रसेव्यमनिशं वेदान्तवेद्यं विभुम् ।
रामाख्यं जगदीश्वरं सुरगुरुं मायामनुष्यं हरिं
वन्देऽहं करुणाकरं रघुवरं भूपालचूडामणिम् ॥ ॥

वन्दे रामं सच्चिदानन्दं वन्दे रामं सच्चिदानन्दम् ।
शरणागत जनपालक शरणं विघ्नहरं सुखशान्तिः करणम् ।
परं पदं मङ्गल अरविंदं वन्दे रामं सच्चिदानन्दम् ।
परं पावनं प्रियतं रूपं परमेशं शुभ शक्ति स्वरूपम् ।
सर्वाधारं महा सुख कंदं वन्दे रामं सच्चिदानन्दम् ॥ ॥

श्रीराम सीतावर राघवेति
हे कौशलेशात्मजनायकेति ।
श्रीराम जयराम जय जय दयालु
श्रीराम जय राम जय जय कृपालु ॥ ॥

वैदेहीसहितं सुरद्रुमतले हेमे महामण्डपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ ॥

वामे भूमिसुता पुरश्च हनुमान् पश्चात् सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयो वाय्वाधिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराज् तारासुतो जाम्बवान्
मध्ये नील सरोज कोमलरुचिं रामं भजे श्यामलम् ॥ ॥

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ॥ ॥

कोमलाङ्गं विशालाक्षं इन्द्रनील समप्रभम्
दक्षिणाङ्गे दशरथं पुत्राप्येक्षेण तत्परम् ।
प्रष्टतो लक्षमणं देवं सछत्रं कनक प्रभम्
पार्श्वे भरत शत्रुघ्न चामर व्य्जनान्वितौ
अग्रेत्यग्रौ हनूमन्तं रामानुग्रह कांक्षिणम् ॥ ॥

दूरीकृत सीतार्तिः प्रकटीकृत रामवैभव स्फूर्तिः ।
दारित दशमुख कीर्तिः पुरतो मम भातु हनूमतो मूर्तिः ॥ ॥

अग्रतः पृष्ठतश्चैव पार्श्वतश्च महाबलौ ।
आकर्णपूर्ण धन्वानौ रक्षेतां रामलक्ष्मणौ ॥ ॥

राम राम राम राम रामनामतारकं
राम कृष्ण वासुदेव भक्तिमुक्तिदायकम् ।
शङ्कराय गीयमानपुण्यनामकीर्तनं
जानकीमनोहरं श्रीरामचन्द्रमं भजे ॥ ॥

मनोजवं मारुततुल्यवेगम् ।
जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यम् ।
श्रीरामदूतं शरणं प्रपद्ये ॥ ॥

अतुलितबलधामं हेमशैलाभदेहं
दनुजवनकृशानुं ज्ञानिनामग्रगण्यम् ।
सकलगुणनिधानं वानराणामधीशं
रघुपतिप्रियभक्तं वातजातं नमामि ।

बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरोगता ।
अजाड्यं वाक्पटुत्वं च हनूमत्स्मरणाद्भवेत् ॥ ॥

यत्र यत्र रघुनाथ कीर्तनं
तत्र तत्र कृतमस्तकाञ्जलिम् ।
भाष्पवारि परिपूर्ण लोचनं
मारुतिं नमत राक्षसान्तकम् ॥ ॥

करचरण कृतं वाक्कायजं कर्मजं वा ।
श्रवणनयनजं वा मानसं वापराधं ।
विहितमविहितं वा सर्वमेतत्क्षमस्व ।
जय जय करुणाब्धे श्रीमहादेव शम्भो ॥ ॥

कर्पूरगौरं करुणावतारं
संसारसारं भुजगेन्द्रहारम् ।
सदा वसन्तं हृदयारविन्दे
भवं भवानीसहितं नमामि ॥ ॥

वन्दे उमापतिं सुरगुरुं वन्दे जगत्कारणम् ।
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ।
वन्दे सूर्य शशाङ्क वह्निनयन वन्दे मुकुन्द प्रियम् ।
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ।

अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ।
ये भूता विघ्नकर्तारस्ते गच्छन्तु शिवाज्ञया ॥ ॥

मङ्गलं भगवान् शंभुः मङ्गलं वृषभध्वजः ।
मङ्गलं पार्वतीनाथो मङ्गलायतनो हरः ॥ ॥

षडाननं कुङ्कुमरक्तवर्णं
महामतिं दिव्यमयूरवाहनम् ।
रुद्रस्य सूनुं सुरसैन्यनाथं
गुहं सदा शरणमहं प्रपद्ये ॥ ॥

नमो नमस्ते गुह शक्तिधाम्ने
नमो नमस्ते गुह शक्तिधर्त्रे ।
नमो नमस्ते गुह देवसेना
भर्त्रे नमस्ते कुलभूषणाय ॥ ॥

ज्ञानशक्तिधर स्कन्द वल्लीकल्याण सुन्दर ।
देवसेना मनः कान्त कार्तिकेय नमोऽस्तुते ।

मयूराधिरूढं महावाक्यगूढं
मनोहारि देहं महच्चित्तगेहम् ।
महीदेवदेवं महावेदभावं
महादेवबालं भजे लोकपालम् ॥ ॥

सरस्वति नमस्तुभ्यं वरदे कामरूपिणि ।
विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा ॥ ॥

या कुन्देन्दु तुषार हार धवला या शुभ्रवस्त्रावृता ।
या वीणावरदंड मंडितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवै सदा वंदिता ।
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ ॥

ध्यायेत् पद्मासनस्थां विकसितवदनां पद्मपत्रायताक्षीं
हेमाभां पीतवस्त्रां करकलितलसद्धेमपद्मां वराङ्गीम् ।
सर्वालङ्कारयुक्तां सततमभयदां भक्तनम्रां भवानीं
श्रीविद्यां शान्तमूर्तिं सकलसुरनुतां सर्वसम्पत्प्रदात्रीम् ॥ ॥

जय जय देवि चराचरसारे कुचयुगशोभित मुक्ताहारे ।
वीणापुस्तकरंजितहस्ते भगवति भारति देवि नमस्ते ॥ ॥

स्मरामि नित्यं देवेशि त्वया प्रेरित मानसः ।
त्वदाज्ञा शिर धृत्वा भजामि परमेश्वरीम् ।

वन्दे पद्मकरां प्रसन्नवदनां सौभाग्यदां भाग्यदाम् ।
हस्ताभ्यामभयप्रदां मणिगणैर्नाना विधैर्भूषिताम् ॥ ॥

भक्ताभीष्टफलप्रदाम् हरिहर ब्रह्मादिभिः सेविताम् ।
पार्श्वे पङ्कज शङ्खपद्मनिधिभिर्युक्ताम् सदा शक्तिभिः ॥ ॥

मातर्नमामि कमले कमलायताक्षि
श्रीविश्णुहृत्कमल वासिनि विश्वमातः ।
क्षीरोदजे कमलकोमल गर्भ गौरि
लक्ष्मी ! प्रसीद सततं नमतां शरण्ये ॥ ॥

समुद्रवसने देवि पर्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्वमे ॥ ॥

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ ॥

नारायणि महामाये विष्णुमाये सनातनि ।
प्राणाधिदेवि कृष्णस्य मामुद्धर भवार्णवात् ।

चतुर्भुजे चन्द्रकलावतंसे
कुचोन्नते कुङ्कुमरागशोणे ।
पुण्ड्रेक्षु पाषंङ्क्ष पुष्पबाण
हस्ते नमस्ते जगदेकमातः ॥ ॥

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा सप्तमातरः ॥ ॥

सर्वे भवंतु सुखिनः सर्वे संतु निरामयाः ।
सर्वे भद्राणि पश्यंतु मा कश्चिद् दुःखभाग्भवेत् ॥ ॥

गणनाथसरस्वतीरविशुक्रबृहस्पतीन् ।
पंचैतान् संस्मरेन्नित्यं वेदवाणीप्रवृत्तये ।

आरोग्यः प्रददातु नो दिनकरः चन्द्रोयशो निर्मलं
भूतिं भूमिसुतः सुधांशुतनयः प्रज्ञां गुरुर्गौरवम् ।
काव्यः कोमलवाग्विलासमतुलं मन्दो मुदं सर्वदा
राहुर्बाहु-बलं विरोध-शमनं केतुः कुलस्योन्नतिम् ॥ ॥

ॐ सर्वेषां स्वस्तिर्भवतु । सर्वेषां शान्तिर्भवतु ।
सर्वेषां पूर्णं भवतु । सर्वेषां मङ्गलं भवतु ।
सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःख भाग्भवेत् ।

स्वस्ति प्रजाभ्यः परिपालयन्ताम् ।
न्यायेन मार्गेण महीं महीशाम् ।
गो ब्राह्मणेभ्यः शुभमस्तु नित्यं ।
लोकाः समस्ताः सुखिनो भवंतु ॥ ॥

काले वर्षन्तु पर्जन्यः पृथिवी शस्यशालिनी ।
देशोयं क्षोभरहिताः ब्राह्मणाः संतु निर्भयः ॥ ॥

अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् ।
सर्वेषामविरोधेन यज्ञकर्म समारभे ॥ ॥

अग्निं प्रज्वालितं वन्दे जातवेदं हुताशनम् ।
हिरण्यमनलं वन्दे समृद्धं विश्वतोमुखम् ॥ ॥

श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ।
आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन ॥ ॥

ॐ ध्येयः सदा सवितृमण्डल मध्यवर्ति ।
नारायणः सरसिजासन्संनिविष्टः ।
केयूरवान मकरकुण्डलवान किरीटी ।
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ ॥

आदित्यस्य नमस्कारान् ये कुर्वन्ति दिने दिने ।
जन्मान्तरसहस्रेषु दारिद्र्यं दोष नाशते ।
अकालमृत्यु हरणं सर्वव्याधि विनाशनम् ।
सूर्यपादोदकं तीर्थं जठरे धारयाम्यहम् ॥ ॥

नमामि गङ्गे तव पादपङ्कजं
सुरासुरैर्वन्दितदिव्यरूपम् ।
भुक्तिं च मुक्तिं च ददासि नित्यं
भावानुसारेण सदा नराणाम् ॥ ॥

गङ्गा गङ्गेति यो ब्रूयात् योजनाना शतैरपि ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं सगच्छति ॥ ॥

अहल्या द्रौपदी सीता तारा मन्दोदरी तथा ।
पंचकन्या स्मरेन्नित्यं महापातकनाशनम् ॥ ॥

ब्रह्मामुरारिस्त्रिपुरांतकारी भानुशशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रश्च शनि राहु केतवः कुर्वंतु सर्वे मम सुप्रभातम् ॥ ॥

प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं
सच्चित्सुखं परमहंसगतिं तुरीयम् ।
यत्स्वपनजागरसुषुप्तमवैति नित्यं
तद्ब्रह्म निष्कलमहं न च भूतसङ्घः ॥ ॥

प्रातर्भजामि मनसा वचसामगम्यं
वाचो विभान्ति निखिला यदनुग्रहेण ।
यन्नेतिनेतिवचनैनिर्गमा अवोचुस्तं
देव देवमजं अच्युतं आहुरग्रयम् ॥ ॥

प्रातर्नमामि तमसः परमर्कवर्णं
पूर्ण सनातन पदं पुरुषोत्तमाख्यम् ।
यस्मिन्निदं जगदशेषं अशेषभूतं
रज्ज्वां भुजङ्गं इव प्रतिभासितं वै ॥ ॥

शुभं करोति कल्याणमारोग्यं धनसम्पदा ।
शत्रुबुद्धिविनाशाय दीपज्योतिर्नमोऽस्तुते ॥ ॥

दीपज्योतिः परब्रह्म दीपज्योतिर्जनार्दनः ।
दीपो हरतु मे पापं दीपज्योतिर्नमोऽस्तुते ॥ ॥

रामस्कंदं हनूमंतं वैनतेयं वृकोदरम् ।
शयने स्मरणे नित्यं दुःस्वप्नं तस्यनश्यति ॥ ॥

त्वमेव माता च पिता त्वमेव ।
त्वमेव बंधुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव ।
त्वमेव सर्वं मम देवदेव ॥ ॥

ब्रह्मार्पणं ब्रह्म हविः ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ ॥

योगेन चित्तस्य पदेन वाचः मलं शरीरस्य च वैद्यकेन ।
योपाकरोत्तं प्रवरं मुनीनां पतंजलिं प्रांजलिरानतोऽस्मि ॥ ॥

विनायकं गुरुं भानुं ब्रह्माविष्णुमहेश्वरान् ।
सरस्वतीं प्रणम्यादौ सर्वकार्यार्थसिद्धये ॥ ॥

नारायणं नमस्कृत्य नरंचैव नरोत्तमम् ।
देवीं सरस्वतिं व्यास ततो जय मुदीरयेत् ॥ ॥

ॐ ईशावास्यमिदँ सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ ॥

हयग्रीव हयग्रीव हयग्रीवेति वादिनम् ।
नरं मुंचन्ति पापानि दरिद्रमिव योषितः ॥ ॥

हयग्रीव हयग्रीव हयग्रीवेति यो वदेत् ।
तस्य निस्सरते वाणी जह्नुकन्या प्रवाहवत् ॥ ॥

हयग्रीव हयग्रीव हयग्रीवेति यो ध्वनिः ।
विशोभते स वैकुण्ठ कवाटोद्घाटनक्षमः ॥ ॥

सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः ।
देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ ॥

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
तानि तानि विनश्यन्ति प्रदक्षिण पदे पदे ॥ ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर
यत्पूजितं मयादेव परिपूर्णं तदस्तु मे ।
अपराध सहस्राणि क्रियन्तेऽहर्निशं मया
दासोऽयं इति मां मत्वा क्षमस्व पुरुषोत्तम ॥ ॥

ब्रह्माणं शङ्करं विष्णुं यमं रामं दनुं बलिम् ।
सप्तैतान् यःस्मरेन्नित्यं दुःस्वपन्स्तस्य नश्यति ॥ ॥

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्र यमनिलेभ्यो नमोऽस्तु चन्द्राग्नि मरुत्गणेभ्यः ॥ ॥

नर्मदायै नमः प्रातः नर्मदायै नमो निशि ।
नमोऽस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पदः ।
जरत्कार्वोर्जरत्कर्वा समुत्पन्न महायशाः ।
अस्तीक सत्यसन्धो मां पन्नगेभ्यो अभिरक्षतु ॥ ॥

आवाहनं न जानामि न जानामि विसर्जनं ।
तस्मात्कारुण्य भावेन क्षमस्व परमेश्वर ॥ ॥

यदक्षर पदभ्रष्टं मात्रा हीनन्तु यद्भवेत् ।
तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तुते ॥ ॥

कार्पण्य दोषोपहत स्वभावः
पृच्छामि त्वां धर्म सम्मूढचेताः ।
यच्छ्रेयस्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ॥

नमः सर्वहितार्थाय जगदाधारहेतवे ।
साष्टाङ्गोऽयं प्रणामस्ते प्रयत्नेन मया कृतः ॥ ॥

गतं पापं गतं दुःखं गतं दारिद्र्यमेव च ।
आगता सुखसम्पत्तिः पुण्याच्च तव दर्शनात् ॥ ॥

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ॥ ॥

गाङ्गं वारि मनोहारि मुरारिचरणच्युतं ।
त्रिपुरारिशिरश्चारि पापहारि पुनातु मां ॥ ॥

असितगिरिसमस्यात् कज्जलं सिंधूपात्रे
सुरतरुवरशाखा लेखनी पत्रमूर्वी ।
लिखति यदि गृहित्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति ॥ ॥

शिवं शिवकरं शान्तं शिवात्मानं शिवोत्तमम् ।
शिवमार्ग प्रणेधरम् प्रणतोस्मि सदाशिवम् ॥ ॥

रामनाम सदा प्रेरणा संस्मरामि जगद्गुरुम् ।
क्षणं विस्मृतिं याति सत्यं सत्यं वचो मम ॥ ॥

ॐ शांतिः शांतिः शांतिः ।